श्रीः ।

# सनातनमानवधर्माः ।




इदं पुस्तकम्

मनोः स्मृतेः सर्वसाधारणधर्मवचनानि समुद्धृत्य

बापटोपाह्वगोविन्दशास्त्रिणा

संगृहीतम् ।

---

( द्वितीयावृत्तिः )

---

मुम्बय्यां

निर्णयसागराधिपतिना तुकाराम जावजी इत्यनेन स्वकीये मुद्रायन्त्रे मुद्रयित्वा प्राकाश्यं नीतम् ।

---

शकाब्दाः १८२६, सनाब्दाः १९०५.

---

मूल्यं आणकद्वयम्.

# प्रस्तावना.

सर्वधर्मशास्त्रप्रणेतॄणां मनुः श्रेष्ठ इति ज्ञातमेव सर्वेषाम् । मनुना वर्णाश्रमधर्माः सर्वसाधारणधर्माश्चोपदिष्टास्ते सर्वे मनुस्मृतिनाम्ना प्रसिद्धायां भृगुसंहितायां संकलिताः । आङ्ग्लभाषादिबहुविधविषयाभ्यासव्यासक्तचित्तैराधुनिकविद्यार्थिभिर्धर्मशास्त्रग्रन्थेभ्यः स्वधर्मो ज्ञातुं न शक्यते । श्रूयते च वर्णाश्रमधर्मेषु प्रशिथिलादराणामप्याधुनिकानां सभावार्तापत्रादिषु भूयोभूयः प्रवादः 'धर्मशिक्षणं शिशूनामावश्यकम्' इति । तमनुसृत्यैव कासुचित्पाठशालासु पाठ्यंते च कतिचन श्रीमद्भगवद्गीताश्लोकाः । परंत्वसंस्कृतचित्तैर्विद्यार्थिभिर्भगवद्गीतातात्पर्यं ज्ञातुं नितरामशक्यमिति संमतं विदुषाम् । भगवद्गीताया विषयस्तत्त्वज्ञानं मनुस्मृतेश्च धर्मज्ञानमिति स्पष्टमेव । अतो धर्मशास्त्रादेव धर्मो ज्ञातुं योग्य इति मत्वा मनोः स्मृतेः सर्वसाधारणधर्मवचनानि समुद्धृत्येदं 'सनातनमानवधर्माः' इत्यभिहितमतिलघुपुस्तकमध्याप्याध्यापकोपयोगार्थं प्रसिद्धिं नीतं तद्धर्मज्ञानप्रसाराय सुलभं साधनं भूयादित्याशास्ते ॥

बापटोपाह्वः गोविन्दशास्त्री.

# अनुक्रमणिका.

श्रीगणेशाय नमः

अथ

# सनातनमानवधर्माः ।



## सत्यम् ।

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः[1] ॥ १ ॥
यो यथा संतमात्मानमन्यथा सत्सु भाषते ।
स पापकृत्तमो लोके स्तेन आत्मापहारकः ॥ २ ॥
वाच्यर्था नियताः सर्वे वाङ्मूला वाग्विनिःसृताः ।
तां तु यः स्तेनयेद्वाचं[2] स सर्वस्तेयकृन्नरः ॥ ३ ॥

## धर्माचरणम् ।

धृतिः[3] क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या[4][5] सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ १ ॥
एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ २ ॥
मन्यंते वै पापकृतो न कश्चित्पश्यतीह नः ।
तांस्तु देवाः प्रपश्यंति स्वस्यैवान्तरपूरुषः ॥ ३ ॥
अहिंसा सत्यमस्तेयं शौचमिंद्रियनिग्रहः ।
एतं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ ४ ॥

१ त्रिकालाबाधितः । २ असत्यं वदेत् । ३ संतोषः ।
४ शास्त्रज्ञानम् । ५ ईश्वरज्ञानम् ।

धर्मं संचिनुयान्नित्यं वल्मीकमिव पुत्तिकाः ।
परलोकसहायार्थं सर्वभूतान्यपीडयन् ॥ ५ ॥
नामुत्र हि सहायार्थं पिता माता च तिष्ठतः ।
न पुत्रदारं न ज्ञातिर्धर्मस्तिष्ठति केवलः ॥ ६ ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ ।
विमुखा बांधवा यान्ति धर्मस्तमनुगच्छति ॥ ७ ॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ८ ॥
चरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्मेण जीवन् हि सद्यः पतति जातितः ॥ ९ ॥

## पितृभक्तिः ।

यं मातापितरौ क्लेशं सहेते संभवे[1] नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥ १ ॥
तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ।
तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ २ ॥
तेषां त्रयाणां शुश्रूषा परमं तप उच्यते ।
न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ॥ ३ ॥
त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान्विजयेद्गृही ।
दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ ४ ॥
इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥ ५ ॥
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ ६ ॥

१ कल्याणे ।

यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ।
तेष्वेव नित्यं शुश्रूषां कुर्यात्प्रियहिते रतः ॥ ७ ॥
तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः ॥ ८ ॥
त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते ।
एष धर्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥ ९ ॥

## गुरुभक्तिः ।

अल्पं वा बहु वा यस्य श्रुतं[1]स्योपकरोति यः ।
तमपीह गुरुं विद्याच्छ्रुतोपक्रियया तया ॥ १ ॥
नीचं शय्यासनं चास्य सर्वदा गुरुसंनिधौ ।
गुरोस्तु चक्षुर्विषये न विविक्ता[2]सनो भवेत् ॥ २ ॥
नोदाहरेदस्य नाम परोक्षमपि केव[3]लम् ।
न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ ३ ॥
गुरोर्यत्र [4]परीवादो निंदा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गंतव्यं वा ततोऽन्यतः ॥ ४ ॥
शय्यासनेऽध्याचरिते श्रेयसा[5] न समाविशेत् ।
शय्यासनस्थश्चैवैनं प्रत्युत्थायाभिवादयेत् ॥ ५ ॥

## शिष्याचरणम् ।

चोदितो गुरुणा नित्यमप्रचोदित एव वा ।
कुर्यादध्ययने यत्नमाचार्यस्य हितेषु च ॥ १ ॥

---

१ श्रुतेन विद्ययेत्यर्थः । २ प्रसारितहस्तपादः । ३ आचार्याः इत्यादि सन्मानोपपदरहितम् । ४ अविद्यमानदोषकथनं परीवादः, निंदा विद्यमानदोषकथनम् । ५ श्रेष्ठेन ।

शरीरं चैव वाचं च बुद्धींद्रियमनांसि च ।
नियम्य प्रांजलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥ २ ॥
श्रेयस्सु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्रेषु चार्येषु गुरोश्चैव स्वबंधुषु ॥ ३ ॥
ऊर्ध्वं प्राणा ह्युत्क्रामंति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ ४ ॥
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धंते आयुर्विद्या यशो बलम् ॥ ५ ॥

### शिक्षणप्रकारः ।

अहिंसयैव भूतानां कार्यं श्रेयोनुशासनम् ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता ॥ १ ॥

### शिष्ययोग्यता ।

धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे ॥ १ ॥

### उद्योगः ।

नात्मानमवमन्येत पूर्वाभिरसमृद्धिभिः ।
आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ॥ १ ॥

### श्रेष्ठत्वम् ।

वित्तं बन्धुर्वयः कर्म विद्या भवति पंचमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥ १ ॥
न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥ २ ॥

१ उत्तरकले । २ क्षारमृत्क्षेत्रे । ३ बंधुलसंबंधः । ४ मानार्हाणि ।

## पुरुषार्थसाधनम् ।

वशे कृत्वेंद्रियग्रामं संयम्य च मनस्तथा ।
सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥ १ ॥
धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ २ ॥

## इन्द्रियजयः ।

इंद्रियाणां प्रसंगेन दोषमृच्छति मानवः ।
संनियम्य तु तान्येव सिद्धिं समधिगच्छति ॥ १ ॥
इंद्रियाणां विरचितां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥ २ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३ ॥
यश्चैतान् प्राप्नुयात्सर्वान् यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ ४ ॥
न तथैतानि शक्यंते संनियन्तुमसेवया ।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥ ५ ॥
इंद्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ६ ॥
अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ ७ ॥

---

१ योगतः उपायेन । २ धर्मार्थकाममोक्षयोग्यताम् । ३ विषयाणाम् । ४ प्रसक्तानि ।

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ८ ॥
इंद्रियार्थेषु सर्वेषु न प्रसज्येत कामतः[1] ।
अतिप्रसक्तिं चैतेषां मनसा सन्निवर्तयेत् ॥ ९ ॥
अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम्[2] ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥ १० ॥
नहीदृशमनायुष्यं लोके किंचन विद्यते ।
यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ११ ॥

## क्षमा ।

नारुंतुदः स्यादार्तोऽपि न परद्रोहकर्मधीः ।
ययास्योद्विजते वाचा नालोक्यां[3] तामुदीरयेत् ॥ १ ॥
सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते ।
सुखं चरति लोकेऽस्मिन्नवमंता विनश्यति ॥ २ ॥

## अहिंसा ।

योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित्सुखमेधते ॥ १ ॥
यो वंधनवधक्लेशान् प्राणिनां न चिकीर्षति ।
सर्वस्य च हितप्रेप्सुः सुखमत्यंतमश्नुते ॥ २ ॥
यद्ध्यायति यत्कुरुते धृतिं बध्नाति यत्र च ।
तदवाप्नोत्ययत्नेन यो हिनस्ति न कंचन ॥ ३ ॥

---

१ यथेष्टम् । २ भोजनमिति भोगसामान्यस्योपलक्षणम् । ३ स्वर्गगतिप्रतिकूलाम् ।

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
नच प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥ ४ ॥
समुत्पत्तिं च मांसस्य वधबंधौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥ ५ ॥

## सुखदुःखे ।

संतोषं परमास्थाय सुखार्थी संयतो वसेत् ।
संतोषमूलं हि सुखं दुःखमूलं विपर्ययः ॥ १ ॥
यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ २ ॥
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ ३ ॥

## आतिथ्यम् ।

संप्राप्ताय त्व[1]तिथये प्रदद्यादासनोदके ।
अन्नं चैव यथाशक्ति सत्कृत्य विधिपूर्वकम् ॥ १ ॥
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ २ ॥
अप्रणोद्योऽतिथिः सायं सूर्योढो[2] गृहमेधिना[3] ।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत् ॥ ३ ॥
नैव स्वयं तदश्नीयादतिथिं यन्न भोजयेत् ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं चातिथिपूजनम् ॥ ४ ॥
आसनावसथौ[4] शय्यामनुव्रज्या[5]मुपासनम्[6] ।
उत्तमेषूत्तमं कुर्याद्धीने हीनं समे समम् ॥ ५ ॥

---

१ ग्रामान्तरादागताय । २ सूर्येण आनीतः । सायमागत इत्यर्थः ।
३ गृहस्थेन । ४ आवसथः वासस्थलम् । ५ अनुगमनम् । ६ सत्कारः ।

उपासते ये गृहस्थाः परपाकमबुद्धयः ।
तेन ते प्रेत्य पशुतां व्रजंत्यन्नादिदायिनाम् ॥ ६ ॥

## आप्तरक्षणम् ।

शक्तः परजने दाता स्वजने दुःखजीविनि ।
मध्वापातो विषास्वादः स धर्मप्रतिरूपकः[2] ॥ १ ॥

## कन्याविक्रयनिषेधः ।

न कन्यायाः पिता विद्वान् गृह्णीयात् शुल्कमण्वपि ।
गृह्णंश्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी ॥ १ ॥
स्त्रीधनानि तु ये मोहादुपजीवंति बांधवाः ।
नारीयानानि वस्त्रं वा ते पापा यांत्यधोगतिम् ॥ २ ॥

## स्त्रीषु वर्तनम् ।

पितृभिर्भ्रातृभिश्चैताः[3] पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥ १ ॥
यत्र नार्यस्तु पूज्यंते रमंते तत्र देवताः ।
यत्रैतास्तु न पूज्यंते सर्वास्तत्राफलाः क्रियाः ॥ २ ॥
शोचंति जामयो[4] यत्र विनश्यत्याशु तत्कुलम् ।
न शोचंति तु यत्रैता वर्धते तद्धि सर्वदा ॥ ३ ॥
जामयो यानि गेहानि शपंत्यप्रतिपूजिताः ।
तानि कृत्याहतानीव विनश्यंति समंततः ॥ ४ ॥

---

१ आवश्यककारणाद्विना केवलमातिथ्यार्थं न गन्तव्यमित्यर्थः । २ धर्म इव दृश्यमानः न वास्तवो धर्म इत्यर्थः । ३ स्त्रियः । ४ कुलस्त्रियः ।

तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ ५ ॥
संतुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ६ ॥
स्त्रियां तु रोचमानायां[1] सर्वं तद्रोचते कुलम् ।
तस्यां त्वरोचमानायां सर्वमेव न रोचते ॥ ७ ॥
सुवासिनीः कुमारीश्च रोगिणो गर्भिणीः स्त्रियः ।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥ ८ ॥
अदत्वा तु य एतेभ्यः पूर्वं भुंक्तेऽविचक्षणः ।
स भुंजानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥ ९ ॥

## स्त्रीधर्माः ।

सदा प्रहृष्टया भाव्यं गृहकार्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ १ ॥
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्संती नाचरेत्किंचिदप्रियम् ॥ २ ॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता ।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ ३ ॥
पतिं या नाभिचरति मनोवाग्देहसंयता ।
सा भर्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥ ४ ॥

## दंपतीधर्माः ।

स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वं च धर्मं प्रयत्नेन जायां रक्षन् स रक्षति ॥ १ ॥

---

१ शोभमानायाम् ।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपायैर्योगैस्तु शक्यास्ताः परिरक्षितुम् ॥ २ ॥
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्यां च परिणाह्यस्य चेक्षणे ॥ ३ ॥
यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ ४ ॥
प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ ५ ॥
अन्योन्यस्याव्यभीचारो भवेदामरणांतिकः ।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥ ६ ॥
तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।
यथा नाभिचरेतां तौ वियुक्तावितरेतरम् ॥ ७ ॥

## प्रायश्चित्तम् ।

अकुर्वन् विहितं कर्म निंदितं च समाचरन् ।
प्रसक्तश्चेंद्रियार्थेषु प्रायश्चित्तीयते नरः ॥ १ ॥
कृत्वा पापं हि संतप्य तस्मात्पापात्प्रमुच्यते ।
नैव कुर्यां पुनरिति निवृत्त्या पूयते तु सः ॥ २ ॥
अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्म विगर्हितम् ।
तस्माद्विमुक्तिमन्विच्छन् द्वितीयं न समाचरेत् ॥ ३ ॥

## मोक्षसाधनम् ।

इंद्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥ १ ॥

सम्यग्दर्शन[1]संपन्नः कर्मभिर्न निबध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥ २ ॥
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गंधि पूर्णं मूत्रपुरीषयोः ॥ ३ ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं[2] त्यजेत् ॥ ४ ॥
वाग्दंडोऽथ मनोदंडः कायदंडस्तथैव च ।
यस्यैते निहिता बुद्धौ त्रिदंडीति स उच्यते ॥ ५ ॥
त्रिदंडमेतन्निक्षिप्य सर्वभूतेषु मानवः ।
कामक्रोधौ तु संम्यय ततः सिद्धिं नियच्छति ॥ ६ ॥
सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम् ।
तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥ ७ ॥

## सदाचरणम् ।

यदि स्त्री यद्यवरजः श्रेयः किंचित्समाचरेत् ।
तत्सर्वमाचरेद्युक्तो यत्र वास्य रमेन्मनः ॥ १ ॥
विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तममेध्यादपि कांचनम् ॥ २ ॥
यात्रामात्रप्रसिद्ध्यर्थं स्वैः कर्मभिरगर्हितैः ।
अक्लेशेन शरीरस्य कुर्वीत धनसंचयम् ॥ ३ ॥
वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेषवाग्बुद्धिसारूप्यमाचरन् विचरेदिह ॥ ४ ॥

---

१ ब्रह्मनिष्ठः । २ पृथिव्यादिपंचमहाभूतात्मके देहे आत्ममतिं न कुर्यादित्यर्थः ।

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।
नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥ ५ ॥
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथा विजानाति विज्ञानं चास्य रोचते ॥ ६
नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत् ।
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥ ७ ।
न मृल्लोष्ठं च मृद्गीयान्न छिंद्यात्करजैस्तृणम् ।
न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम् ॥ ८ ॥
भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् ।
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥ ९ ॥
हीनांगानतिरिक्तांगान्विद्याहीनान्वयोधिकान् ।
रूपद्रव्यविहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ १० ॥
अभिवादयेद्वृद्धांश्च दद्याच्चैवासनं स्वकम् ।
कृतांजलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ ११ ॥
श्रुतिस्मृत्युदितं सम्यक् निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतंद्रितः ॥ १२ ॥
आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद्धनमक्षय्यमाचारो हंत्यलक्षणम् ॥ १३ ॥
दुराचारो हि पुरुषो लोके भवति निंदितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ १४ ॥
सर्वलक्षणहीनोऽपि यः सदाचारवान्नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ १५ ॥

१ वेदार्थबोधकग्रन्थान् । २ आयत्यां उत्तरकाले ।

यत्कर्म कुर्वतोऽस्य स्यात्परितोषोंऽतरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ १६ ॥
नास्तिक्यं वेदनिंदां च देवतानां च कुत्सनम् ।
द्वेषं दंभं च मानं च क्रोधं तैक्ष्ण्यं च वर्जयेत् ॥ १७ ॥
परस्य दंडं नोद्यच्छेत्क्रुद्धो नैव निपातयेत् ।
अन्यत्र पुत्राच्छिष्याद्वा शिष्टचर्थं ताडयेत्तु तौ ॥ १८ ॥
पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः ।
पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः ॥ १९ ॥
अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम् ।
हिंसारतश्च यो नित्यं नेहासौ सुखमेधते ॥ २० ॥
न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन्विपर्ययम् ॥ २१ ॥
नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृंतति ॥ २२ ॥
सत्यधर्मार्यवृत्तेषु शौचे चैवारमेत्सदा ।
शिष्यांश्च शिष्याद्धर्मेण वाग्बाहूदरसंयतः ॥ २३ ॥
परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ।
धर्मं चाप्यसुखोदर्कं लोकविक्रुष्टमेव च ॥ २४ ॥
न पाणिपादचपलो न नेत्रचपलोऽनृजुः ।
न स्याद्वाक्चपलश्चैव न परद्रोहकर्मधीः ॥ २५ ॥
येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यते ॥ २६ ॥

---

१ दुःखमाप्नोति ।

एकः प्रजायते जंतुरेक एव प्रलीयते ।
एकोऽनुभुंक्ते सुकृतमेक एव च दुष्कृतम् ॥ २७ ॥
तस्माद्धर्मं सहायार्थं नित्यं संचिनुयाच्छनैः ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ २८ ॥
धर्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वंतं खशरीरिणम् ॥ २९ ॥
उत्तमैरुत्तमैर्नित्यं संबंधानाचरेत्सह ।
निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥ ३० ॥
दृढकारी मृदुर्दांतः क्रूराचारैरसंवसन् ।
अहिंस्रो दमदानाभ्यां जयेत्स्वर्गं तथाव्रतः ॥ ३१ ॥
दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत् ॥ ३२ ॥
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३३ ॥
क्षंतव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् ।
बालवृद्धातुराणां च कुर्वता हितमात्मनः ॥ ३४ ॥
यः क्षिप्तो मर्षयत्यार्तैस्तेन स्वर्गे महीयते ।
यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥ ३५ ॥
एवं संचिंत्य मनसा प्रेत्य कर्मफलोदयम् ।
मनोवाङ्मूर्तिभिर्नित्यं शुभं कर्म समाचरेत् ॥ ३६ ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥ ३७ ॥

१ आरब्धसंपादयिता । २ पंचज्ञानेन्द्रियैर्बुद्धिमनोभ्यां च गृहीतेऽर्थे वाक्प्रवर्ततेऽतस्तानि द्वाराण्युच्यन्ते तैरवकीर्णां निक्षिप्ताम् ।

# राजधर्माः ।

त[1]स्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पंते स्वधर्मान्न चलंति च ॥ १ ॥
तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥ २ ॥
स राजा पुरुषो दंडः स नेता शासिता च सः ।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः ॥ ३ ॥
दंडः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दंडः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ ४ ॥
समीक्ष्य स धृतः सम्यक् सर्वा रंजयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ ५ ॥
यदि न प्रणयेद्राजा दंडं दंड्येष्वतंद्रितः ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥ ६ ॥
सर्वो दंडजितो लोको दुर्लभो हि शुचिर्नरः ।
दंडस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ ७ ॥
तस्याहुः संप्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥ ८ ॥
तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिधीयते ।
कामात्मा विषमः क्षुद्रो दंडेनैव निहन्यते ॥ ९ ॥
दंडो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हंति नृपमेव सबांधवम् ॥ १० ॥

---

१ राजदण्डस्य ।

सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
न शक्यो न्यायतो नेतुं सक्तेन विषयेषु च ॥ ११ ॥
शुचिना सत्यसंधेन यथाशास्त्रानुसारिणा ।
प्रणेतुं शक्यते दंडः सुसहायेन धीमता ॥ १२ ॥
इंद्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेंद्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥ १३ ॥
दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च ।
व्यसनानि दुरंतानि प्रयत्नेन विवर्जयेत् ॥ १४ ॥
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ १५ ॥
मृगयाक्षा दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या[१] च कामजो दशको गणः ॥ १६ ॥
पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दंडजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ १७ ॥
द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ १८ ॥
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ १९ ॥
दंडस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ २० ॥
सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषंगिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ २१ ॥

---

१ व्यर्थभ्रमणम् ।

व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते।
व्यसन्यधोधो व्रजति स्वर्यात्यव्यसनी मृतः ॥ २२ ॥
अलब्धं चैव लिप्सेत लब्धं रक्षेत्प्रयत्नतः ।
रक्षितं वर्धयेच्चैव वृद्धं पात्रेषु निःक्षिपेत् ॥ २३ ॥
नित्यमुद्यतदंडः स्यान्नित्यं विवृतपौरुषः ।
नित्यं संवृतसर्वार्थो नित्यं छिद्रानुसार्थरेः ॥ २४ ॥
नित्यमुद्यतदंडस्य कृत्स्नमुद्विजते[1] जगत्।
तस्मात्सर्वाणि भूतानि दंडेनैव प्रसाधयेत् ॥ २५ ॥
अमाययैव वर्तेत न कथंचन मायया।
बुध्येतारिप्रयुक्तां च मया नित्यं सुसंवृतः ॥ २६ ॥
नास्य छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवांगानि रक्षेद्विवरमात्मनः ॥ २७ ॥
यथोद्धरति निर्दाता[2] कक्षं[3] धान्यं च रक्षति ।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपंथिनः ॥ २८ ॥
मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबांधवः ॥ २९ ॥
शरीरकर्षणात्प्राणाः क्षीयंते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयंते राष्ट्रकर्षणात् ॥ ३० ॥
नोच्छिंद्यादात्मनो मूलं परेषां चातितृष्णया ।
उच्छिंदन् ह्यात्मनो मूलमात्मानं तांश्च पीडयेत् ॥ ३१ ॥
तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः ।
तीक्ष्णश्चैव मृदुश्चैव राजा भवति संमतः ॥ ३२ ॥

---

१ बिभेति। २ धान्यलावकः । कृषीवल इत्यर्थः । ३ तृणम् ।

अमात्यमुख्यं धर्मज्ञं प्राज्ञं दांतं कुलोद्भवम् ।
स्थापयेदासने तस्मिन् खिन्नः कार्येक्षणे नृणाम् ॥ ३३ ॥
एवं सर्वं विधायेदमितिकर्तव्यमात्मनः ।
युक्तश्चैवाप्रमत्तश्च परिरक्षेदिमाः प्रजाः ॥ ३४ ॥
विक्रोशंत्यो यस्य राष्ट्राद्धीयंते दस्युभिः प्रजाः ।
संपश्यतः सभृत्यस्य मृतः स नतु जीवति ॥ ३५ ॥
क्षत्रियस्य परो धर्मः प्रजानामेव पालनम् ।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥ ३६ ॥

## समाप्ताः

लोकानां धर्मबोधाय मनोः स्मृत्याः **सनातनाः** ॥
**धर्माः** समुद्धृता एते परेशः प्रीयतामिति ॥ १ ॥

---

# निर्णयसागरस्थविक्रेयसंस्कृतपुस्तकानि

| पुस्तकम् | किं. | ट. |
|---|---|---|
| **अष्टांगहृदयमूलम्**—वाग्भट्टविरचितम् ... ... | १ | ८ |
| **निर्णयसिंधुः मूलम्**—कमलाकरभट्टविरचितम् ... | २ | |
| **पुष्पबाणविलासः**—श्रीकालिदासकृतः पण्डितवर-श्रीवेङ्कटसार्वभौमविरचितव्याख्यासहितः ... ... | ८≡ | ८ |
| **महिम्नस्तोत्रम्**—मधुसूदनी (शिवविष्णवर्थ) व्याख्या-सहितम् ... ... ... ... ... ... | ·।· | ८ |
| **महिम्नस्तोत्रम्**—सुबोधिनीटीकासहितम् ... ... | ८= | ८ |
| **राक्षसकाव्यं सटीकम्**—श्रीकालिदासविरचितम् ... | ८− | ८ |
| **लौकिकन्यायाञ्जलिः**—नाम व्यावहारिकन्यायसंग्रहः | ·।= | ८ |
| **सूक्तिसंग्रहः**—कविराक्षसकृतः ... ... ... | ८− | ८ |
| **उत्तररामचरितम्**—महाकविश्रीभवभूतिप्रणीतं, वीरराघवकृतया टीकया समेतम् ... ... ... | ·।।· | ८− |
| **गीतगोविन्दम्**—महाकविश्रीजयदेवविरचितं, कुम्भ-नृपतिप्रणीतया रसिकप्रियाव्याख्यया, महामहोपाध्या-यशंकरमिश्रनिर्मितया रसमञ्जर्याख्यव्याख्यया च संवलितम् ... ... ... ... ... | ·।।· | ८− |
| **दशरूपकम्**—श्रीधनंजयविरचितं, धनिकृतया अवलो-कटीकया सहितम् ... ... ... ... ... | ·।।· | ८ |
| **पञ्चतन्त्रकम्**—श्रीविष्णुशर्मसंकलितम् ... ... | १ | ८− |
| **ब्रह्मसूत्रशांकरभाष्यम्**—रत्नप्रभा-भामती-आनन्द-गिरीय (न्यायनिर्णय) व्याख्यात्रयोपेतम्. ... ... | ८ | ·। |
| **चम्पूभारतम्** ... ... ... ... ... ... | २॥ | ·। |
| **चरकसंहिता** ... ... ... ... ... ... | २ | ·। |

इमान्यन्यानि च पुस्तकानि व्ही. पी. द्वारा, मूल्ये प्रेषिते वास्मन्नि-मिलिष्यंति.

नि. सा. प्रेस, मुंबई.



गुरुकुल कांगड़ी विश्वविद्यालय,

हरिद्वार



पुस्तक लौटाने की तिथि अन्त में अङ्कित है । इस तिथि को पुस्तक न लौटाने पर दस नये पैसे प्रति पुस्तक अतिरिक्त दिनों का अर्थदण्ड आप को लगाया जायेगा ।

| | | | |
|---|---|---|---|
| | | | |

५०००.११.६४ ।

